महोरस्को महेष्वासो गूढजत्रुररिन्दमः ।
आजानुबाहुस्सुशिरास्सुललाटस्सुविक्रमः ॥1.1.10॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

(सः रामः) महोरस्कः महेष्वासः गूढजत्रुः अरिन्दमः आजानुबाहुः सुशिराः सुललाटः सुविक्रमः (अस्ति)

- अन्वयार्थः

सः रामः विशालवक्षःस्थलः महान् धनुर्धरः मांसलतया पिहितस्कन्धास्थिः शत्रुनाशकः आजानु बाहुयुक्तः शोभनशिरस्कः शोभनललाटः शोभनगतियुक्तः अस्ति।

महोरस्को महेष्वासो गूढजत्रुररिन्दमः ।
आजानुबाहुस्सुशिरास्सुललाटस्सुविक्रमः ॥1.1.10॥

- पदपरिचयः
  - महोरस्कः, महेष्वासः, अरिन्दमः, सुललाटः, सुविक्रमः – महोरस्क, महेष्वास, अरिन्दम, सुललाट, सुविक्रम– पुं, प्रथमा, एकवचनम् ।
  - गूढजत्रुः, आजानुबाहुः – गूढजत्रु, आजानुबाहु – पुं, प्रथमा, एकवचनम् ।
  - सुशिराः – सुशिरस् – पुं, प्रथमा, एकवचनम् ।

समस्समविभक्ताङ्गस्स्निग्धवर्णः प्रतापवान् ।
पीनवक्षा विशालाक्षो लक्ष्मीवान् शुभलक्षणः ॥ 1.1.11 ॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

(सः रामः) समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् पीनवक्षाः विशालाक्षः लक्ष्मीवान् शुभलक्षणः च (अस्ति)।

- अन्वयार्थः

सः रामः समुचिताकृतिः (नातिदीर्घः, नातिक्षुद्रः) अङ्गसौष्ठवसम्पन्नः आकर्षकः तेजस्वी अभ्युन्नतवक्षस्थलः आयतलोचनः सौन्दर्यसम्पन्नः शुभलक्षणोपेतश्च अस्ति।

Veda Vijnana
Shodha Samsthanam
Centre for Śāstra and Contemporary Studies

समस्समविभक्ताङ्गस्स्निग्धवर्णः प्रतापवान् ।
पीनवक्षा विशालाक्षो लक्ष्मीवान् शुभलक्षणः ॥ 1.1.11 ॥

- पदपरिचयः
  - समः, समविभक्ताङ्गः, स्निग्धवर्णः, विशालाक्षः,शुभलक्षणः – सम, समविभक्ताङ्ग, स्निग्धवर्ण, विशालाक्ष,शुभलक्षण – पुं, प्रथमा, एकवचनम् ।
  - प्रतापवान्, लक्ष्मीवान् – प्रतापवत्, लक्ष्मीवत् - पुं, प्रथमा, एकवचनम् ।
  - पीनवक्षाः – पीनवक्षस् - पुं, प्रथमा, एकवचनम् ।

धर्मज्ञस्सत्यसन्धश्च प्रजानां च हिते रतः ।
यशस्वी ज्ञानसम्पन्नश्शुचिर्वश्यस्समाधिमान् ॥1.1.12॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

(स च रामः) धर्मज्ञः सत्यसन्धः प्रजानां हिते च रतः यशस्वी ज्ञानसम्पन्नः शुचिः वश्यः समाधिमान् च (अस्ति)

- अन्वयार्थः

स रामः धर्मतत्वज्ञः सत्यप्रतिज्ञः जनानां च कल्याणे प्रवृत्तः यशोवान् ज्ञानवान् पूतः जितेन्द्रियः समाधिस्थः (अस्ति)

Veda Vijnana
Shodha Samsthanam
Centre for Śāstra and Contemporary Studies

धर्मज्ञस्सत्यसन्धश्च प्रजानां च हिते रतः ।
यशस्वी ज्ञानसम्पन्नश्शुचिर्वश्यस्समाधिमान् ॥1.1.12॥

- पदपरिचयः
  - धर्मज्ञः, सत्यसन्धः, रतः, ज्ञानसम्पन्नः, वश्यः – धर्मज्ञ, सत्यसन्ध, रत, ज्ञानसम्पन्न, वश्य - पुं, प्रथमा, एकवचनम्।
  - प्रजानाम् – प्रजा – स्त्री, षष्ठी, बहुवचनम्।
  - च - अव्ययम्
  - हिते – हितम् – नपुं, सप्तमी, एकवचनम्।
  - यशस्वी – यशस्विन् – पुं, प्रथमा, एकवचनम्।
  - शुचिः – शुचि – पुं, प्रथमा, एकवचनम्।
  - समाधिमान् – समाधिमत् – पुं, प्रथमा, एकवचनम्।

Veda Vijnana
Shodha Samsthanam
Centre for Śāstra and Contemporary Studies

प्रजापतिसमश्श्रीमान् धाता रिपुनिषूदनः ।
रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ॥1.1.13॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  (स च रामः) प्रजापतिसमः श्रीमान् धाता रिपुनिषूदनः जीवलोकस्य रक्षिता धर्मस्य (च) परिरक्षिता (अस्ति)।

- अन्वयार्थः

  (स च रामः) विधातृतुल्यः श्रीसम्पन्नः प्रजानां धारकः शत्रुहन्ता प्राणिलोकस्य रक्षकः धर्मस्य (च) रक्षकः आत्मनः आत्मीयस्य संरक्षकः (अस्ति)।

प्रजापतिसमश्श्रीमान् धाता रिपुनिषूदनः ।
रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ॥1.1.13॥

- पदपरिचयः
  - प्रजापतिसमः, रिपुनिषूदनः – प्रजापतिसम, रिपुनिषूदन – पुं, प्रथमा, एकवचनम्।
  - श्रीमान् – श्रीमत् – पुं, प्रथमा, एकवचनम्।
  - धाता, रक्षिता, परिरक्षिता – धातृ, रक्षितृ, परिरक्षितृ - पुं, प्रथमा, एकवचनम्।
  - जीवलोकस्य, धर्मस्य – जीवलोक, धर्म - पुं, षष्ठी, एकवचनम्।

Veda Vijnana
Shodha Samsthanam
Centre for Śāstra and Contemporary Studies

रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता ।
वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः ॥1.1.14॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

(स च रामः) स्वस्य धर्मस्य स्वजनस्य च रक्षिता वेदवेदाङ्गतत्वज्ञः धनुर्वेदे च निष्ठितः (अस्ति)

- अन्वयार्थः

(स च रामः) आत्मनः धर्मस्य आत्मीयस्य च संरक्षकः (पुनः) वेदानां वेदाङ्गानां च रहस्य-ज्ञाता धनुर्विद्यायां पारङ्गतः (अस्ति)।

रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता ।
वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः ॥1.1.14 ।

- पदपरिचयः
  - रक्षिता – रक्षितृ – पुं, प्रथमा, एकवचनम् ।
  - स्वस्य, धर्मस्य, स्वजनस्य – स्व, धर्म, स्वजन - पुं, षष्ठी, एकवचनम् ।
  - च- अव्ययम्
  - वेदवेदाङ्गतत्वज्ञः निष्ठितः – वेदवेदाङ्गतत्वज्ञ, निष्ठित - पुं, प्रथमा, एकवचनम् ।
  - धनुर्वेदे – धनुर्वेद - पुं, सप्तमी, एकवचनम् ।

## सर्वशास्त्रार्थतत्त्वज्ञस्स्मृतिमान्प्रतिभानवान् ।
## सर्वलोकप्रियस्साधुरदीनात्मा विचक्षणः ॥1.1.15॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

(स च रामः) सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान् सर्वलोकप्रियः साधुः अदीनात्मा विचक्षणः (च अस्ति)

- अन्वयार्थः

( स च रामः) शास्त्राणां मर्मज्ञः दृढस्मृतिः अलौकिकबुद्धिसम्पन्नः सर्वजनप्रियः सज्जनः अदीनस्वभावः विवेकसम्पन्नश्च (अस्ति)

Veda Vijnana
Shodha Samsthanam
Centre for Śāstra and Contemporary Studies

सर्वशास्त्रार्थतत्त्वज्ञस्स्मृतिमान्प्रतिभानवान् ।
सर्वलोकप्रियस्साधुरदीनात्मा विचक्षणः ॥1.1.15॥

- पदपरिचयः
  - सर्वशास्त्रार्थतत्वज्ञः, सर्वलोकप्रियः, विचक्षणः - सर्वशास्त्रार्थतत्वज्ञ, सर्वलोकप्रिय, विचक्षण - पुं, प्रथमा, एकवचनम्।
  - साधुः – साधु - पुं, प्रथमा, एकवचनम्।
  - स्मृतिमान्, प्रतिभावान् – स्मृतिमत्, प्रतिभामत् - पुं, प्रथमा, एकवचनम्।
  - अदीनात्मा – अदीनात्मन् - पुं, प्रथमा, एकवचनम्।